॥ मुद्गलोपनिषत् ॥

श्रीमत्पुरुषसूक्तार्थं पूर्णानन्दकलेवरम् ।
पुरुषोत्तमविख्यातं पूर्णं ब्रह्म भवाम्यहम् ॥

ॐ वाङ् मे मनसि प्रतिष्ठिता
मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि ॥

वेदस्य म आणीस्थः । श्रुतं मे मा प्रहासीरनेनाधीते-
नाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि ॥

तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥

ॐ पुरुषसूक्तार्थनिर्णयं व्याख्यास्यामः
पुरुषसंहितायां पुरुषसूक्तार्थः संग्रहेण प्रोच्यते ।
सहस्रशीर्षेत्यत्र सशब्दोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा ॥ १॥

तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता ।
द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते ॥ २॥

विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥ ३॥

एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥ ४॥

तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥ ५॥

यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः ।
सप्तास्यासन्परिधयः समिधश्च समीरिताः ॥ ६॥

तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥ ७॥

तस्मादिति च मन्त्रेण जगत्सृष्टिः समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥ ८॥

यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः ।
य एवमेतज्जानाति स हि मुक्तो भवेदिति ॥ ९॥ १॥

अथ तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं
विस्तरेण प्रतिपादितम् । वासुदेव इन्द्राय भगवज्ज्ञानमुपदिश्य
पुनरपि सूक्ष्मश्रवणाय प्रणतायेन्द्राय परमरहस्यभूतं
पुरुषसूक्ताभ्यां खण्डद्वयाभ्यामुपादिशत् ।
द्वौ खण्डावुच्येते । योऽय मुक्तः स पुरुषो
नामरूपज्ञानागोचरं संसारिणामतिदुर्ज्ञेयं
विषयं विहाय क्लेशादिभिः संक्लिष्टदेवादिजिहीर्षया
सहस्रकलावयवकल्याणं दृष्टमात्रेण मोक्षदं
वेषमाददे । तेन वेषेण भूम्यादिलोकं व्याप्यानन्त-
योजनमत्यतिष्ठत् । पुरुषो नारायणो भूतं भव्यं
भविष्यच्चासीत् । स च सर्वस्मान्महिम्नो ज्यायान् ।
तस्मान्न कोऽपि ज्यायान् । महापुरुष आत्मानं
चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि चासीत् । इतरेण
चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन् । स च
पादनारायणो जगत्स्रष्टुं प्रकृतिमजनयत् । स
समृद्धकायः सन्सृष्टिकर्म न जज्ञिवान् ।
सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत् ।
ब्रह्मंस्तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं
दृढं ग्रन्थिकलेवरं हविर्ध्यात्वा मां हविर्भुजं
ध्यात्वा वसन्तकालमाज्यं ध्यात्वा ग्रीष्ममिध्मं
ध्यात्वा शरदृतुं रसं ध्यात्वैवमग्नौ हुत्वाङ्ग-
स्पर्शात्कलेवरो वज्रं हीष्यते । ततः स्वकार्यान्सर्व-
प्राणिजीवान्सृष्ट्वा पश्चाद्याः प्रादुर्भविष्यन्ति ।
ततः स्थावरजङ्गमात्मकं जगद्भविष्यति । एतेन
जीवात्मनोर्योगेन मोक्षप्रकारश्च कथित इत्यनुसन्धेयम् ।
य इमं सृष्टियज्ञं जानाति मोक्षप्रकारं च
सर्वमायुरेति ॥ २॥

एको देवो बहुधा निविष्ट अजायमानो बहुधा विजायते ।
तमेतमग्निरित्यध्वर्यव उपासते । यजुरित्येष हीदं
सर्वं युनक्ति । सामेति छन्दोगाः । एतस्मिन्हीदं सर्वं
प्रतिष्ठितम् । विषमिति सर्पाः । सर्प इति सर्पविदः ।
ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः ।
स्वधेति पितरः । देवजन इति देवजनविदः । रूपमिति गन्धर्वाः ।

गन्धर्व इति अप्सरसः । तं यथायथोपासते तथैव भवति ।
तस्माद्ब्राह्मणः पुरुषरूपं परंब्रह्मैवाहमिति
भावयेत् । तद्रूपो भवति । य एवं वेद ॥ ३॥

तद्ब्रह्म तापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं
पञ्चकोशातीतं षड्भावविकारशून्यमेवमादि-
सर्वविलक्षणं भवति । तापत्रयं त्वाध्यात्मिकाधिभौति-
काधिदैविकं कर्तृकर्मकार्यज्ञातृज्ञानज्ञेय-
भोक्तृभोगभोग्यमिति त्रिविधम् । त्वङ्मांसशोणितास्थि-
स्नायुमज्जाः षट्कोशाः । कामक्रोधलोभमोहमद-
मात्सर्यमित्यरिषड्वर्गः । अन्नमयप्राणमयमनोमय-
विज्ञानमयानन्दमया इति पञ्चकोशाः ।
प्रियात्मजननवर्धनपरिणामक्षयनाशाः षड्भावाः ।
अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः ।
कुलगोत्रजातिवर्णाश्रमरूपाणि षड् भ्रमाः ।
एतद्योगेन परमपुरुषो जीवो भवति नान्यः ।
य एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो
भवति । स आदित्यपूतो भवति । अरोगी भवति । श्रीमांश्च भवति ।
पुत्रपौत्रादिभिः समृद्धो भवति । विद्वांश्च भवति ।
महापातकात्पूतो भवति । सुरापानात्पूतो भवति ।
अगम्यागमनात्पूतो भवति । मातृगमनात्पूतो भवति ।
दुहितृस्नुषाभिगमनात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति ।
वेदिजन्महानात्पूतो भवति । गुरोरशुश्रूषणात्पूतो भवति ।
अयाज्ययाजनात्पूतो भवति । अभक्ष्यभक्षणात्पूतो भवति ।
उग्रप्रतिग्रहात्पूतो भवति । परदारगमनात्पूतो भवति ।
कामक्रोधलोभमोहेर्ष्यादिभिरबाधितो भवति । सर्वेभ्यः
पापेभ्यो मुक्तो भवति । इह जन्मनि पुरुषो भवति तस्मादेत-
त्पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि
गुह्यतरं नादीक्षितायोपदिशेत् ।
नानूचानाय । नायज्ञशीलाय । नावैष्णवाय ।
नायोगिने । न बहुभाषिणे । नाप्रियवादिने ।
नासंवत्सरवेदिने । नातुष्टाय । नानधीतवेदायोपदिशेत् ।
गुरुरप्येवंविच्छुचौ देशे पुण्यनक्षत्रे
प्राणानायम्य पुरुषं ध्यायन्नुपसन्नाय
शिष्याय दक्षिणकर्णे पुरुषसूक्तार्थमुपदिशेद्विद्वान् ।
न बहुशो वदेत् । यातयामो भवति । असकृत्कर्णमुपदिशेत् ।
एतत्कुर्वाणोऽध्येताध्यापकश्च इह जन्मनि पुरुषो
भवतीत्युपनिषत् ॥

ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठित-
माविरावीर्म एधि ॥ वेदस्य म आणीस्थः श्रुतं मे मा
प्रहासीरनेनाधीतेनाहोरात्रान्सन्दधाम्यृतं वदिष्यामि
सत्यं वदिष्यामि ॥ तन्मामवतु तद्वक्तारमवतु अवतु
मामवतु वक्तारमवतु वक्तारम् ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

इति मुद्गलोपनिषत्समाप्ता ॥